न्त्येतावन्मात्रमित्यर्थः ॥ **वक्ष्यामि इति** ॥ 'सहदर्शनमात्रेण न व्याप्तिरवसीयते' इत्यादिनोक्तेः किन्त्वनुकूलतर्कसहितम् । प्रकृते च स नास्तीति पूरणीयम् । नन्वेवं यत्कालान्तरभावि न तत्कारणमिति नियमोऽपि न सम्भवति । विपक्षे बाधकाभावेनाप्रयोजकत्वादित्याशङ्कायामाह ॥ **नियतपूर्वेति** सत्यस्यापि ज्ञानेन निवृत्तौ बाधकतर्कमाशङ्कते ॥ **सत्यस्यापि निवृत्ताविति** ॥ ननु यद्येनाविरुद्धं तत्तथेति व्याप्तिरस्तीत्यत आह ॥ **विपक्ष इति** ॥ ज्ञानमज्ञानस्यैव निवर्तकमिति नियमे न केवलमनुकूलतर्काभावः । किन्तु प्रतिकूलतर्कपराहतिश्चेत्याह ॥ **अनादेश्चेति** ॥ प्रतिकूलतर्के मिथ्यात्वमुपाधिमाशङ्कते ॥ **मिथ्याभूतमिति** ॥ **केदमिति** ॥ आत्मातिरिक्तस्य सत्यस्य त्वन्मतेऽभावादिति भावः ततश्च नोपाध्यभावेनात्मनोऽनिवृत्तिसाधनं सम्भवतीत्युक्तं भवति । किञ्चैवं सत्यस्यापि निवृत्तावात्माऽनिवर्तेतेति त्वदीयतर्केऽपि विरोधसन्निपातस्योपाधित्वात्तदभावेनात्मनोऽनिवृत्तिरस्त्वितिवक्तुं विरोधिसद्भावस्य निवृत्तिप्रयोजकत्वं तावत्परेणाप्यङ्गीकारयितुमाह ॥ **निवृत्तावनादित्वमिति** ॥

श्री० — **दृष्टसामर्थ्यादिति** ॥ प्रबोधस्य स्वाप्ननिगडबन्धनिवर्तकत्वसामर्थ्यस्य दृष्टत्वात्तद्दृष्टान्तेनैव प्रकृतेऽपि ज्ञानाद्बन्धनिवृत्तिरिति नोच्यते इत्यर्थः । आगम एव तरतिशोकमात्मविदित्यादिरित्यर्थः । ननु ज्ञानमज्ञानस्य तत्कार्यस्य वा निवर्तकमिति शुक्तिज्ञाने सहचारदर्शनाद्व्यभिचारादर्शनाच्च नियमोपपत्तिरिति चेत्तत्राह ॥ **न दर्शनेति** ॥ **कुत आत्मनिवृत्तिरिति** ॥ सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेत्यात्मनिवृत्त्यापादनं कुतः । विरोधिनोऽभावादिति भावः ।

च० — श्रुतिप्रमितेऽर्थेऽनुपपत्तिप्रसक्तिरेव नेति सत्यामपि तस्यां तच्छमनौपयिकोपपादकापेक्षा नेति श्रुतिप्रमितेऽप्यर्थेऽनुपपत्तेस्तदपवारकोपपादकापेक्षायाश्च स्थलान्तरे सत्त्वेऽपि प्रकृते न तदुभयमिति वेति कल्पत्रयीमनुसन्दधानस्तद्घटकाद्यकल्पप्रत्याचिख्यासया तमाशङ्कते ॥ **ननु यथेति** ॥ आग्नेयोऽष्टाकपालः उपांशुयाजमन्तरा यजति अग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदितिवाक्यविहितं पौर्णमासत्रिकम् । आग्नेयोऽष्टाकपाल ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोमावास्यायामितिवाक्यविहितं दर्शत्रिकमेव । तेषां षण्णां यागानामपूर्वसाधनतोपपत्त्यर्थमपूर्वाणि कल्प्यन्त इति सम्बन्धः । स्वर्गकामो यजेतेत्यत्र लिङो लौकिककार्यव्युत्पत्त्यनुरोधेन स्वात्मनि पुरुषनियोक्तृत्वान्नियोगपदाभिधेयापूर्वोपलब्धेस्तस्य च विषयमन्तरेणानुपपद्यमानतया क विनियोग इति विनियोगाकाङ्क्षायां यागस्यैव विनियोगं प्रत्यनुबन्धित्वरूपविषयत्वेन सम्बन्धात् यागविषयनियोगमत्र साध्यतया प्रतीयमानः साक्षात्कृत्यसाध्यत्वात्स्वस्य कृतिसाध्यतानिर्वाहाय प्रयत्न[illegible]नियोगनिष्पत्त्यनुकूलसकरणत्वमाक्षिपतीति भावः ॥ **कालान्तरभावीति** ॥